स्नाप्य सम्पूज्य गन्धाद्यैर्ज्वालाकारं मनोरमम् ।
तुष्टाव च तदा रुद्रं सम्पूज्याग्नौ प्रणम्य च ॥ २३॥

देवं नाम्नां सहस्रेण भवाद्येन यथाक्रमम् ।
पूजयामास च शिवं प्रणवाद्यं नमोन्तकम् ॥ २४॥

देवं नाम्नां सहस्रेण भवाद्येन महेश्वरम् ।
प्रतिनाम सपद्मेन पूजयामास शङ्करम् ॥ २५॥

अग्नौ च नामभिर्देवं भवाद्यैः समिदादिभिः ।
स्वाहान्तैर्विधिवद्धुत्वा प्रत्येकमयुतं प्रभुम् ॥ २६॥

तुष्टाव च पुनः शम्भुं भवाद्यैर्भवमीश्वरम् ।
श्री विष्णुरुवाच -
भवः शिवो हरो रुद्रः पुरुषः पद्मलोचनः ॥ २७॥

अर्थितव्यः सदाचारः सर्वशम्भुर्महेश्वरः ।
ईश्वरः स्थाणुरीशानः सहस्राक्षः सहस्रपात् ॥ २८॥

वरीयान् वरदो वन्द्यः शङ्करः परमेश्वरः ।
गङ्गाधरः शूलधरः परार्थैकप्रयोजनः ॥ २९॥

सर्वज्ञः सर्वदेवादिगिरिधन्वा जटाधरः ।
चन्द्रापीडश्चन्द्रमौलिर्विद्वान्विश्वामरेश्वरः ॥ ३०॥

वेदान्तसारसन्दोहः कपाली नीललोहितः ।
ध्यानाधारोऽपरिच्छेद्यो गौरीभर्ता गणेश्वरः ॥ ३१॥

अष्टमूर्तिर्विश्वमूर्तिस्त्रिवर्गः स्वर्गसाधनः ।
ज्ञानगम्यो दृढप्रज्ञो देवदेवस्त्रिलोचनः ॥ ३२॥

वामदेवो महादेवः पाण्डुः परिदृढो दृढः ।
विश्वरूपो विरूपाक्षो वागीशः शुचिरन्तरः ॥ ३३॥

सर्वप्रणयसंवादीवृषाङ्को वृषवाहनः ।
ईशः पिनाकी खट्वाङ्गी चित्रवेषश्चिरन्तनः ॥ ३४॥

तमोहरो महायोगी गोप्ता ब्रह्माङ्गहृज्जटी ।
कालकालः कृत्तिवासाः सुभगः प्रणवात्मकः ॥ ३५॥

उन्मत्तवेषश्चक्षुष्योदुर्वासाः स्मरशासनः ।
दृढायुधः स्कन्दगुरुः परमेष्ठी परायणः ॥ ३६॥

अनादिमध्यनिधनो गिरिशो गिरिबान्धवः ।
कुबेरबन्धुः श्रीकण्ठो लोकवर्णोत्तमोत्तमः ॥ ३७॥

सामान्यदेवः कोदण्डी नीलकण्ठः परश्वधी ।
विशालाक्षो मृगव्याधः सुरेशः सूर्यतापनः ॥ ३८॥

धर्मकर्माक्षमः क्षेत्रं भगवान् भगनेत्रभित् ।
उग्रः पशुपतिस्ताक्ष्र्यप्रियभक्तः प्रियंवदः ॥ ३९॥

दाता दयाकरो दक्षः कपर्दी कामशासनः ।
श्मशाननिलयः सूक्ष्मः श्मशानस्थो महेश्वरः ॥ ४०॥

लोककर्ता भूतपतिर्महाकर्ता महौषधी ।
उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ॥ ४१॥

नीतिः सुनीतिः शुद्धात्मा सोमसोमरतः सुखी ।
सोमपोऽमृतपः सोमो महानीतिर्महामतिः ॥ ४२॥

अजातशत्रुरालोकः सम्भाव्यो हव्यवाहनः ।
लोककारो वेदकारः सूत्रकारः सनातनः ॥ ४३॥

महर्षिः कपिलाचार्यो विश्वदीप्तिस्त्रिलोचनः ।
पिनाकपाणिभूदेवः स्वस्तिदः स्वस्तिकृत्सदा ॥ ४४॥

त्रिधामा सौभगः शर्वः सर्वज्ञः सर्वगोचरः ।
ब्रह्मधृग्विश्वसृक्स्वर्गः कर्णिकारः प्रियः कविः ॥ ४५॥

शाखो विशाखो गोशाखः शिवोनैकः क्रतुः समः ।
गङ्गाप्लवोदको भावः सकलस्थपतिस्थिरः ॥ ४६॥

विजितात्मा विधेयात्मा भूतवाहनसारथिः ।
सगणो गणकार्यश्च सुकीर्तिश्छिन्नसंशयः ॥ ४७॥

कामदेवः कामपालो भस्मोद्धूलितविग्रहः ।
भस्मप्रियो भस्मशायी कामी कान्तः कृतागमः ॥ ४८॥

समायुक्तो निवृत्तात्मा धर्मयुक्तः सदाशिवः ।
चतुर्मुखश्चतुर्बाहुर्दुरावासो दुरासदः ॥ ४९॥

दुर्गमो दुर्लभो दुर्गः सर्वायुधविशारदः ।
अध्यात्मयोगनिलयः सुतन्तुस्तन्तुवर्धनः ॥ ५०॥

शुभाङ्गो लोकसारङ्गो जगदीशोऽमृताशनः ।
भस्मशुद्धिकरो मेरुरोजस्वी शुद्धविग्रहः ॥ ५१॥

हिरण्यरेतास्तरणिर्मरीचिर्महिमालयः ।
महाह्रदो महागर्भः सिद्धवृन्दारवन्दितः ॥ ५२॥

व्याघ्रचर्मधरो व्याली महाभूतो महानिधिः ।
अमृताङ्गोऽमृतवपुः पञ्चयज्ञः प्रभञ्जनः ॥ ५३॥

पञ्चविंशतितत्त्वज्ञः पारिजातः परावरः ।
सुलभः सुव्रतः शूरो वाङ्मयैकनिधिर्निधिः ॥ ५४॥

वर्णाश्रमगुरुर्वर्णी शत्रुजिच्छत्रुतापनः ।
आश्रमः क्षपणः क्षामो ज्ञानवानचलाचलः ॥ ५५॥

प्रमाणभूतो दुर्ज्ञेयः सुपर्णो वायुवाहनः ।
धनुर्धरो धनुर्वेदो गुणराशिर्गुणाकरः ॥ ५६॥

अनन्तदृष्टिरानन्दो दण्डो दमयिता दमः ।
अभिवाद्यो महाचार्यो विश्वकर्मा विशारदः ॥ ५७॥

वीतरागो विनीतात्मा तपस्वी भूतभावनः ।
उन्मत्तवेषः प्रच्छन्नो जितकामो जितप्रियः ॥ ५८॥

कल्याणप्रकृतिः कल्पः सर्वलोकप्रजापतिः ।
तपस्वी तारको धीमान् प्रधानप्रभुरव्ययः ॥ ५९॥

लोकपालोऽन्तर्हितात्मा कल्यादिः कमलेक्षणः ।

वेदशास्त्रार्थतत्त्वज्ञो नियमो नियमाश्रयः ॥ ६०॥

चन्द्रः सूर्यः शनिः केतुर्विरामो विद्रुमच्छविः ।
भक्तिगम्यः परं ब्रह्म मृगबाणार्पणोऽनघः ॥ ६१॥

अद्रिराजालयः कान्तः परमात्मा जगद्गुरुः ।
सर्वकर्माचलस्त्वष्टा माङ्गल्यो मङ्गलावृतः ॥ ६२॥

महातपा दीर्घतपाः स्थविष्ठः स्थविरो ध्रुवः ।
अहः संवत्सरो व्याप्तिः प्रमाणं परमं तपः ॥ ६३॥

संवत्सरकरो मन्त्रः प्रत्ययः सर्वदर्शनः ।
अजः सर्वेश्वरः स्निग्धो महारेता महाबलः ॥ ६४॥

योगी योग्यो महारेताः सिद्धः सर्वादिरग्निदः ।
वसुर्वसुमनाः सत्यः सर्वपापहरो हरः ॥ ६५॥

अमृतः शाश्वतः शान्तो बाणहस्तः प्रतापवान् ।
कमण्डलुधरो धन्वी वेदाङ्गो वेदविन्मुनिः ॥ ६६॥

भ्राजिष्णुर्भोजनं भोक्ता लोकनेता दुराधरः ।
अतीन्द्रियो महामायः सर्वावासश्चतुष्पथः ॥ ६७॥

कालयोगी महानादो महोत्साहो महाबलः ।
महाबुद्धिर्महावीर्यो भूतचारी पुरन्दरः ॥ ६८॥

निशाचरः प्रेतचारी महाशक्तिर्महाद्युतिः ।
अनिर्देश्यवपुः श्रीमान्सर्वहार्यमितो गतिः ॥ ६९॥

बहुश्रुतो बहुमयो नियतात्मा भवोद्भवः ।
ओजस्तेजो द्युतिकरो नर्तकः सर्वकामकः ॥ ७०॥

नृत्यप्रियो नृत्यनृत्यः प्रकाशात्मा प्रतापनः ।
बुद्धः स्पष्टाक्षरो मन्त्रः सन्मानः सारसम्प्लवः ॥ ७१॥

युगादिकृद्युगावर्तो गम्भीरो वृषवाहनः ।
इष्टो विशिष्टः शिष्टेष्टः शरभः शरभो धनुः ॥ ७२॥

अपांनिधिरधिष्ठानं विजयो जयकालवित् ।
प्रतिष्ठितः प्रमाणज्ञो हिरण्यकवचो हरिः ॥ ७३॥

विरोचनः सुरगणो विद्येशो विबुधाश्रयः ।
बालरूपो बलोन्माथी विवर्तो गहनो गुरुः ॥ ७४॥

करणं कारणं कर्ता सर्वबन्धविमोचनः ।
विद्वत्तमो वीतभयो विश्वभर्ता निशाकरः ॥ ७५॥

व्यवसायो व्यवस्थानः स्थानदो जगदादिजः ।
दुन्दुभो ललितो विश्वो भवात्मात्मनिसंस्थितः ॥ ७६॥

वीरेश्वरो वीरभद्रो वीरहा वीरभृद्विराट् ।
वीरचूडामणिर्वेत्ता तीव्रनादो नदीधरः ॥ ७७॥

आज्ञाधारस्त्रिशूली च शिपिविष्टः शिवालयः ।
वालखिल्यो महाचापस्तिग्मांशुर्निधिरव्ययः ॥ ७८॥

अभिरामः सुशरणः सुब्रह्मण्यः सुधापतिः ।
मघवान्कौशिको गोमान् विश्रामः सर्वशासनः ॥ ७९॥

ललाटाक्षो विश्वदेहः सारः संसारचक्रभृत् ।
अमोघदण्डी मध्यस्थो हिरण्यो ब्रह्मवर्चसी ॥ ८०॥

परमार्थः परमयः शम्बरो व्याघ्रकोऽनलः ।
रुचिर्वररुचिर्वन्द्यो वाचस्पतिरहर्पतिः ॥ ८१॥

रविर्विरोचनः स्कन्धः शास्ता वैवस्वतो जनः ।
युक्तिरुन्नतकीर्तिश्च शान्तरागः पराजयः ॥ ८२॥

कैलासपतिकामारिः सविता रविलोचनः ।
विद्वत्तमो वीतभयो विश्वहर्ताऽनिवारितः ॥ ८३॥

नित्यो नियतकल्याणः पुण्यश्रवणकीर्तनः ।
दूरश्रवा विश्वसहो ध्येयो दुःस्वप्ननाशनः ॥ ८४॥

उत्तारको दुष्कृतिहा दुर्धर्षो दुःसहोऽभयः ।
अनादिर्भूर्भुवो लक्ष्मीः किरीटित्रिदशाधिपः ॥ ८५॥

विश्वगोप्ता विश्वभर्ता सुधीरो रुचिराङ्गदः ।
जननो जनजन्मादिः प्रीतिमान्नीतिमान्नयः ॥ ८६॥

विशिष्टः काश्यपो भानुर्भीमो भीमपराक्रमः ।
प्रणवः सप्तधाचारो महाकायो महाधनुः ॥ ८७॥

जन्माधिपो महादेवः सकलागमपारगः ।
तत्त्वातत्त्वविवेकात्मा विभूष्णुर्भूतिभूषणः ॥ ८८॥

ऋषिर्ब्राह्मणविज्जिष्णुर्जन्ममृत्युजरातिगः ।
यज्ञो यज्ञपतिर्यज्वा यज्ञान्तोऽमोघविक्रमः ॥ ८९॥

महेन्द्रो दुर्भरः सेनी यज्ञाङ्गो यज्ञवाहनः ।
पञ्चब्रह्मसमुत्पत्तिर्विश्वेशो विमलोदयः ॥ ९०॥

आत्मयोनिरनाद्यन्तो षड्विंशत्सप्तलोकधृक् ।
गायत्रीवल्लभः प्रांशुर्विश्वावासः प्रभाकरः ॥ ९१॥

शिशुर्गिरिरतः सम्राट् सुषेणः सुरशत्रुहा ।
अमोघोऽरिष्टमथनो मुकुन्दो विगतज्वरः ॥ ९२॥

स्वयंज्योतिरनुज्योतिरात्मज्योतिरचञ्चलः ।
पिङ्गलः कपिलश्मश्रुः शास्त्रनेत्रस्त्रयीतनुः ॥ ९३॥

ज्ञानस्कन्धो महाज्ञानी निरुत्पत्तिरुपप्लवः ।
भगो विवस्वानादित्यो योगाचार्यो बृहस्पतिः ॥ ९४॥

उदारकीर्तिरुद्योगी सद्योगीसदसन्मयः ।
नक्षत्रमाली राकेशः साधिष्ठानः षडाश्रयः ॥ ९५॥

पवित्रपाणिः पापारिर्मणिपूरो मनोगतिः ।
हृत्पुण्डरीकमासीनः शुक्लः शान्तो वृषाकपिः ॥ ९६॥

विष्णुर्ग्रहपतिः कृष्णः समर्थोऽनर्थनाशनः ।
अधर्मशत्रुरक्षय्यः पुरुहूतः पुरुष्टुतः ॥ ९७॥

ब्रह्मगर्भो बृहद्गर्भो धर्मधेनुर्धनागमः ।

जगद्धितैषिसुगतः कुमारः कुशलागमः ॥ ९८॥

हिरण्यवर्णो ज्योतिष्मान्नानाभूतधरो ध्वनिः ।
अरोगो नियमाध्यक्षो विश्वामित्रो द्विजोत्तमः ॥ ९९॥

बृहज्ज्योतिः सुधामा च महाज्योतिरनुत्तमः ।
मातामहो मातरिश्वा नभस्वान्नागहारधृक् ॥ १००॥

पुलस्त्यः पुलहोऽगस्त्यो जातूकर्ण्यः पराशरः ।
निरावरणधर्मज्ञो विरिञ्चो विष्टरश्रवाः ॥ १०१॥

आत्मभूरनिरुद्धोऽत्रि ज्ञानमूर्तिर्महायशाः ।
लोकचूडामणिर्वीरश्चण्डसत्यपराक्रमः ॥ १०२॥

व्यालकल्पो महाकल्पो महावृक्षः कलाधरः ।
अलंकरिष्णुस्त्वचलो रोचिष्णुर्विक्रमोत्तमः ॥ १०३॥

आशुशब्दपतिर्वेगी प्लवनः शिखिसारथिः ।
असंसृष्टोऽतिथिः शक्रः प्रमाथी पापनाशनः ॥ १०४॥

वसुश्रवाः कव्यवाहः प्रतप्तो विश्वभोजनः ।
जर्यो जराधिशमनो लोहितश्च तनूनपात् ॥ १०५॥

पृषदश्वो नभोयोनिः सुप्रतीकस्तमिस्रहा ।
निदाघस्तपनो मेघः पक्षः परपुरञ्जयः ॥ १०६॥

मुखानिलः सुनिष्पन्नः सुरभिः शिशिरात्मकः ।
वसन्तो माधवो ग्रीष्मो नभस्यो बीजवाहनः ॥ १०७॥

अङ्गिरामुनिरात्रेयो विमलो विश्ववाहनः ।
पावनः पुरुजिच्छक्रस्त्रिविद्यो नरवाहनः ॥ १०८॥

मनो बुद्धिरहंकारः क्षेत्रज्ञः क्षेत्रपालकः ।
तेजोनिधिर्ज्ञाननिधिर्विपाको विघ्नकारकः ॥ १०९॥

अधरोऽनुत्तरोज्ञेयो ज्येष्ठो निःश्रेयसालयः ।
शैलो नगस्तनुर्दोहो दानवारिररिन्दमः ॥ ११०॥

चारुधीर्जनकश्चारु विशल्यो लोकशल्यकृत् ।
चतुर्वेदश्चतुर्भावश्चतुरश्चतुरप्रियः ॥ ११११॥

आम्नायोऽथ समाम्नायस्तीर्थदेवशिवालयः ।
बहुरूपो महारूपः सर्वरूपश्चराचरः ॥ ११२॥

न्यायनिर्वाहको न्यायो न्यायगम्यो निरञ्जनः ।
सहस्रमूर्धा देवेन्द्रः सर्वशस्त्रप्रभञ्जनः ॥ ११३॥

मुण्डो विरूपो विकृतो दण्डी दान्तो गुणोत्तमः ।
पिङ्गलाक्षोऽथ हर्यक्षो नीलग्रीवो निरामयः ॥ ११४॥

सहस्रबाहुः सर्वेशः शरण्यः सर्वलोकभृत् ।
पद्मासनः परंज्योतिः परावरफलप्रदः ॥ ११५॥

पद्मगर्भो महागर्भो विश्वगर्भो विचक्षणः ।
परावरज्ञो बीजेशः सुमुखः सुमहास्वनः ॥ ११६॥

देवासुरगुरुर्देवो देवासुरनमस्कृतः ।
देवासुरमहामात्रो देवासुरमहाश्रयः ॥ ११७॥

देवादिदेवो देवर्षिर्देवासुरवरप्रदः ।
देवासुरेश्वरो दिव्यो देवासुरमहेश्वरः ॥ ११८॥

सर्वदेवमयोऽचिन्त्यो देवतात्मात्मसम्भवः ।
ईड्योऽनीशः सुरव्याघ्रो देवसिंहो दिवाकरः ॥ ११९॥

विबुधाग्रवरश्रेष्ठः सर्वदेवोत्तमोत्तमः ।
शिवज्ञानरतः श्रीमान् शिखिश्रीपर्वतप्रियः ॥ १२०॥

जयस्तम्भो विशिष्टम्भो नरसिंहनिपातनः ।
ब्रह्मचारी लोकचारी धर्मचारी धनाधिपः ॥ १२१॥

नन्दी नन्दीश्वरो नग्नो नग्नव्रतधरः शुचिः ।
लिङ्गाध्यक्षः सुराध्यक्षो युगाध्यक्षो युगावहः ॥ १२२॥

स्ववशः सवशः स्वर्गः स्वरः स्वरमयः स्वनः ।
बीजाध्यक्षो बीजकर्ता धनकृद्धर्मवर्धनः ॥ १२३॥

दम्भोऽदम्भो महादम्भः सर्वभूतमहेश्वरः ।
श्मशाननिलयस्तिष्यः सेतुरप्रतिमाकृतिः ॥ १२४॥

लोकोत्तरस्फुटालोकस्त्र्यम्बको नागभूषणः ।
अन्धकारिर्मखद्वेषी विष्णुकन्धरपातनः ॥ १२५॥

वीतदोषोऽक्षयगुणो दक्षारिः पूषदन्तहृत् ।
धूर्जटिः खण्डपरशुः सकलो निष्कलोऽनघः ॥ १२६॥

आधारः सकलाधारः पाण्डुराभो मृडो नटः ।
पूर्णः पूरयिता पुण्यः सुकुमारः सुलोचनः ॥ १२७॥

सामगेयः प्रियकरः पुण्यकीर्तिरनामयः ।
मनोजवस्तीर्थकरो जटिलो जीवितेश्वरः ॥ १२८॥

जीवितान्तकरो नित्यो वसुरेता वसुप्रियः ।
सद्गतिः सत्कृतिः सक्तः कालकण्ठः कलाधरः ॥ १२९॥

मानी मान्यो महाकालः सद्भूतिः सत्परायणः ।
चन्द्रसञ्जीवनः शास्ता लोकगूढोऽमराधिपः ॥ १३०॥

लोकबन्धुर्लोकनाथः कृतज्ञः कृतिभूषणः ।
अनपाय्यक्षरः कान्तः सर्वशास्त्रभृतां वरः ॥ १३१॥

तेजोमयो द्युतिधरो लोकमायोऽग्रणीरणुः ।
शुचिस्मितः प्रसन्नात्मा दुर्जयो दुरतिक्रमः ॥ १३२॥

ज्योतिर्मयो निराकारो जगन्नाथो जलेश्वरः ।
तुम्बवीणी महाकायो विशोकः शोकनाशनः ॥ १३३॥

त्रिलोकात्मा त्रिलोकेशः शुद्धः शुद्धिरथाक्षजः ।
अव्यक्तलक्षणोऽव्यक्तो व्यक्ताव्यक्तो विशाम्पतिः ॥ १३४॥

वरशीलो वरतुलो मानो मानधनो मयः ।
ब्रह्मा विष्णुः प्रजापालो हंसो हंसगतिर्यमः ॥ १३५॥

वेधा धाता विधाता च अत्ता हर्ता चतुर्मुखः ।

कैलासशिखरावासी सर्वावासी सतां गतिः ॥ १३६॥

हिरण्यगर्भो हरिणः पुरुषः पूर्वजः पिता ।
भूतालयो भूतपतिर्भूतिदो भुवनेश्वरः ॥ १३७॥

संयोगी योगविद्ब्रह्मा ब्रह्मण्यो ब्राह्मणप्रियः ।
देवप्रियो देवनाथो देवज्ञो देवचिन्तकः ॥ १३८॥

विषमाक्षः कलाध्यक्षो वृषाङ्को वृषवर्धनः ।
निर्मदो निरहंकारो निर्मोहो निरुपद्रवः ॥ १३९॥

दर्पहा दर्पितो दृप्तः सर्वर्तुपरिवर्तकः ।
सप्तजिह्वः सहस्रार्चिः स्निग्धः प्रकृतिदक्षिणः ॥ १४०॥

भूतभव्यभवन्नाथः प्रभवो भ्रान्तिनाशनः ।
अर्थोऽनर्थो महाकोशः परकार्यैकपण्डितः ॥ १४१॥

निष्कण्टकः कृतानन्दो निर्व्याजो व्याजमर्दनः ।
सत्त्ववान्सात्त्विकः सत्यकीर्तिस्तम्भकृतागमः ॥ १४२॥

अकम्पितो गुणग्राही नैकात्मा नैककर्मकृत् ।
सुप्रीतः सुमुखः सूक्ष्मः सुकरो दक्षिणोऽनलः ॥ १४३॥

स्कन्धः स्कन्धधरो धुर्यः प्रकटः प्रीतिवर्धनः ।
अपराजितः सर्वसहो विदग्धः सर्ववाहनः ॥ १४४॥

अधृतः स्वधृतः साध्यः पूर्तमूर्तिर्यशोधरः ।
वराहशृङ्गधृग्वायुर्बलवानेकनायकः ॥ १४५॥

श्रुतिप्रकाशः श्रुतिमानेकबन्धुरनेकधृक् ।
श्रीवल्लभशिवारम्भः शान्तभद्रः समञ्जसः ॥ १४६॥

भूशयो भूतिकृद्भूतिर्भूषणो भूतवाहनः ।
अकायो भक्तकायस्थः कालज्ञानी कलावपुः ॥ १४७॥

सत्यव्रतमहात्यागी निष्ठाशान्तिपरायणः ।
परार्थवृत्तिर्वरदो विविक्तः श्रुतिसागरः ॥ १४८॥

अनिर्विण्णो गुणग्राही कलङ्काङ्कः कलङ्कहा ।
स्वभावरुद्रो मध्यस्थः शत्रुघ्नो मध्यनाशकः ॥ १४९॥

शिखण्डी कवची शूली चण्डी मुण्डी च कुण्डली ।
मेखली कवची खड्गी मायी संसारसारथिः ॥ १५०॥

अमृत्युः सर्वदृक् सिंहस्तेजोराशिर्महामणिः ।
असंख्येयोऽप्रमेयात्मा वीर्यवान्कार्यकोविदः ॥ १५१॥

वेद्यो वेदार्थविद्गोप्ता सर्वाचारो मुनीश्वरः ।
अनुत्तमो दुराधर्षो मधुरः प्रियदर्शनः ॥ १५२॥

सुरेशः शरणं सर्वः शब्दब्रह्मसतां गतिः ।
कालभक्षः कलङ्कारिः कङ्कणीकृतवासुकिः ॥ १५३॥

महेष्वासो महीभर्ता निष्कलङ्को विशृङ्खलः ।
द्युमणिस्तरणिर्धन्यः सिद्धिदः सिद्धिसाधनः ॥ १५४॥

निवृत्तः संवृतः शिल्पो व्यूढोरस्को महाभुजः ।
एकज्योतिर्निरातङ्को नरो नारायणप्रियः ॥ १५५॥

निर्लेपो निष्प्रपञ्चात्मा निर्व्यग्रो व्यग्रनाशनः ।
स्तव्यस्तवप्रियः स्तोता व्यासमूर्तिरनाकुलः ॥ १५६॥

निरवद्यपदोपायो विद्याराशिरविक्रमः ।
प्रशान्तबुद्धिरक्षुद्रः क्षुद्रहा नित्यसुन्दरः ॥ १५७॥

धैर्याग्र्यधुर्यो धात्रीशः शाकल्यः शर्वरीपतिः ।
परमार्थगुरुर्दृष्टिर्गुरुराश्रितवत्सलः ॥ १५८॥

रसो रसज्ञः सर्वज्ञः सर्वसत्त्वावलम्बनः ।
सूत उवाच -
एवं नाम्नां सहस्रेण तुष्टाव वृषभध्वजम् ॥ १५९॥

स्नापयामास च विभुः पूजयामास पङ्कजैः ।
परीक्षार्थं हरेः पूजाकमलेषु महेश्वरः ॥ १६०॥

गोपयामासकमलं तदैकं भुवनेश्वरः ।

हृतपुष्पो हरिस्तत्र किमिदं त्वभ्यचिन्तयन् ॥ १६१॥

ज्ञात्वा स्वनेत्रमुद्धृत्य सर्वसत्त्वावलम्बनम् ।
पूजयामास भावेन नाम्ना तेन जगद्गुरुम् ॥ १६२॥

ततस्तत्र विभुर्दृष्ट्वा तथाभूतं हरो हरिम् ।
तस्मादवततताराशु मण्डलात्पावकस्य च ॥ १६३॥

कोटिभास्करसंकाशं जटामुकुटमण्डितम् ।
ज्वालामालावृतं दिव्यं तीक्ष्णदंष्ट्रं भयङ्करम् ॥ १६४॥

शूलटङ्कगदाचक्रकुन्तपाशधरं हरम् ।
वरदाभयहस्तं च दीपिचर्मोत्तरीयकम् ॥ १६५॥

इत्थम्भूतं तदा दृष्ट्वा भवं भस्मविभूषितम् ।
हृष्टो नमश्चकाराशु देवदेवं जनार्दनः ॥ १६६॥

दुद्रुवुस्तं परिक्रम्य सेन्द्रा देवास्त्रिलोचनम् ।
चचाल ब्रह्मभुवनं चकम्पे च वसुन्धरा ॥ १६७॥

ददाह तेजस्तच्छम्भोः प्रान्तं वै शतयोजनम् ।
अधस्ताच्चोर्ध्वतश्चैव हाहेत्यकृत भूतले ॥ १६८॥

तदा प्राह महादेवः प्रहसन्निव शङ्करः ।
सम्प्रेक्ष्य प्रणयाद्विष्णुं कृताञ्जलिपुटं स्थितम् ॥ १६९॥

ज्ञातं मयेदमधुना देवकार्यं जनार्दन ।
सुदर्शनाख्यं चक्रं च ददामि तव शोभनम् ॥ १७०॥

यद्रूपं भवता दृष्टं सर्वलोकभयङ्करम् ।
हिताय तव यत्नेन तव भावाय सुव्रत ॥ १७१॥

शान्तं रणाजिरे विष्णो देवानां दुःखसाधनम् ।
शान्तस्य चास्त्रं शान्तं स्याच्छान्तेनास्त्रेण किं फलम् ॥

१७२॥

शान्तस्य समरे चास्त्रं शान्तिरेव तपस्विनाम् ।

योद्धुः शान्त्या बलच्छेदः परस्य बलवृद्धिदः ॥ १७३॥

देवैरशान्तैर्यद्रूपं मदीयं भावयाव्ययम् ।
किमायुधेन कार्यं वै योद्धुं देवारिसूदन ॥ १७४॥

क्षमा युधि न कार्यं वै योद्धुं देवारिसूदन ।
अनागते व्यतीते च दौर्बल्ये स्वजनोत्करे ॥ १७५॥

अकालिके त्वधर्मे च अनर्थेवारिसूदन ।
एवमुक्त्वा ददौ चक्रं सूर्यायुतसमप्रभम् ॥ १७६॥

नेत्रं च नेता जगतां प्रभुर्वै पद्मसन्निभम् ।
तदाप्रभृति तं प्राहुः पद्माक्षमिति सुव्रतम् ॥ १७७॥

दत्त्वैनं नयनं चक्रं विष्णवे नीललोहितः ।
पस्पर्श च कराभ्यां वै सुशुभाभ्यामुवाच ह ॥ १७८॥

वरदोहं वरश्रेष्ठ वरान्वरय चेप्सितान् ।
भक्त्या वशीकृतो नूनं त्वयाहं पुरुषोत्तम ॥ १७९॥

इत्युक्तो देवदेवेन देवदेवं प्रणम्य तम् ।
त्वयि भक्तिर्महादेव प्रसीद वरमुत्तमम् ॥ १८०॥

नान्यमिच्छामि भक्तानामार्तयो नास्ति यत्प्रभो ।
तच्छ्रुत्वा वचनं तस्य दयावान् सुतरां भवः ॥ १८१॥

पस्पर्श च ददौ तस्मै श्रद्धां शीतांशुभूषणः ।
प्राह चैवं महादेवः परमात्मानमच्युतम् ॥ १८२॥

मयि भक्तश्च वन्द्यश्च पूज्यश्चैव सुरासुरैः ।
भविष्यति न संदेहो मत्प्रसादात्सुरोत्तम ॥ १८३॥

यदा सती दक्षपुत्री विनिन्द्येव सुलोचना ।
मातरं पितरं दक्षं भविष्यति सुरेश्वरी ॥ १८४॥

दिव्या हैमवती विष्णो तदा त्वमपि सुव्रत ।
भगिनीं तव कल्याणीं देवीं हैमवतीमुमाम् ॥ १८५॥

नियोगाद्ब्रह्मणः साध्वीं प्रदास्यसि ममैव ताम् ।
मत्सम्बन्धी च लोकानां मध्ये पूज्यो भविष्यसि ॥ १८६॥

मां दिव्येन च भावेन तदा प्रभृति शङ्करम् ।
द्रक्ष्यसे च प्रसन्नेन मित्रभूतमिवात्मना ॥ १८७॥

इत्युक्त्वान्तर्दधे रुद्रो भगवान्नीललोहितः ।
जनार्दनोपि भगवान्देवानामपि सन्निधौ ॥ १८८॥

अयाचत महादेवं ब्रह्माणं मुनिभिः समम् ।
मया प्रोक्तं स्तवं दिव्यं पद्मयोने सुशोभनम् ॥ १८९॥

यः पठेच्छृणुयाद्वापि श्रावयेद्वा द्विजोत्तमान् ।
प्रतिनाम्नि हिरण्यस्य दत्तस्य फलमाप्नुयात् ॥ १९०॥

अश्वमेधसहस्रेण फलं भवति तस्य वै ।
घृताद्यैः स्नापयेद्रुद्रं स्थाल्या वै कलशैः शुभैः ॥

१९१॥

नाम्नां सहस्रेणानेन श्रद्धया शिवमीश्वरम् ।
सोपि यज्ञसहस्रस्य फलं लब्ध्वा सुरेश्वरैः ॥ १९२॥

पूज्यो भवति रुद्रस्य प्रीतिर्भवति तस्य वै ।
तथास्त्विति तथा प्राह पद्मयोनेर्जनार्दनम् ॥ १९३॥

जग्मतुः प्रणिपत्यैनं देवदेवं जगद्गुरुम् ।
तस्मान्नाम्नां सहस्रेण पूजयेदनघो द्विजाः ॥ १९४॥

जपीन्नाम्नां सहस्रं च स याति परमां गतिम् ॥ १९५॥

॥ इति श्रीलिङ्गमहापुराणे पूर्वभागे सहस्रनामभिः
पूजनाद्विष्णुचक्रलाभो नामाष्टनवतितमोध्यायः ॥

॥ श्रीशिवसहस्रनामस्तोत्रं वायुपुराणे अध्याय ३० ॥

॥ दक्ष उवाच ॥

नमस्ते देवदेवेश देवारिबलसूदन ।
देवेन्द्र ह्यमरश्रेष्ठ देवदानवपूजित ॥ ३०.१८०॥

सहस्राक्ष विरूपाक्ष त्र्यक्ष यक्षाधिपप्रिय ।
सर्वतः पाणिपादस्त्वं सर्वतोऽक्षिशिरोमुखः ।
सर्वतः श्रुतिमान् लोके सर्वानावृत्य तिष्ठसि ॥ ३०.१८१॥

शङ्कुकर्ण महाकर्ण कुम्भकर्णार्णवालय ।
गजेन्द्रकर्ण गोकर्ण पाणिकर्ण नमोऽस्तु ते ॥ ३०.१८२॥

शतोदर शतावर्त्त शतजिह्व शतानन ।
गायन्ति त्वां गायत्रिणो ह्यर्च्चयन्ति तथार्च्चिनः ॥ ३०.१८३॥

देवदानवगोप्ता च ब्रह्मा च त्वं शतक्रतुः ।
मूर्त्तीशस्त्वं महामूर्ते समुद्राम्बु धराय च ॥ ३०.१८४॥

सर्वा ह्यस्मिन् देवतास्ते गावो गोष्ठ इवासते ।
शरीरन्ते प्रपश्यामि सोममग्निं जलेश्वरम् ॥ ३०.१८५॥

आदित्यमथ विष्णुञ्च ब्रह्माणं सबृहस्पतिम् ।
क्रिया कार्य्यं कारणञ्च कर्त्ता करणमेव च ॥ ३०.१८६॥

असच्च सदसच्चैव तथैव प्रभवाव्ययम् ।
नमो भवाय शर्वाय रुद्राय वरदाय च ॥ ३०.१८७॥

पशूनां पतये चैव नमस्त्वन्धकघातिने ।
त्रिजटाय त्रिशीर्षाय त्रिशूलवरधारिणे ॥ ३०.१८८॥

त्र्यम्बकाय त्रिनेत्राय त्रिपुरघ्नाय वै नमः ।
नमश्चण्डाय मुण्डाय प्रचण्डाय धराय च ॥ ३०.१८९॥

दण्डि मासक्तकर्णाय दण्डिमुण्डाय वै नमः ।
नमोऽर्द्धदण्डकेशाय निष्काय विकृताय च ॥ ३०.१९०॥

विलोहिताय धूम्राय नीलग्रीवाय ते नमः ।
नमस्त्वप्रतिरूपाय शिवाय च नमोऽस्तु ते ॥ ३०.१९१॥

सूर्य्याय सूर्य्यपतये सूर्य्यध्वजपताकिने ।
नमः प्रमथनाथाय वृषस्कन्धाय धन्विने ॥ ३०.१९२॥

नमो हिरण्यगर्भाय हिरण्यकवचाय च ।
हिरण्यकृतचूडाय हिरण्यपतये नमः ॥ ३०.१९३॥

सत्रघाताय दण्डाय वर्णपानपुटाय च ।
नमः स्तुताय स्तुत्याय स्तूयमानाय वै नमः ॥ ३०.१९४॥

सर्वायाभक्ष्यभक्ष्याय सर्वभूतान्तरात्मने ।
नमो होत्राय मन्त्राय शुक्लध्वजपताकिने ॥ ३०.१९५॥

नमो नमाय नम्याय नमः किलिकिलाय च ।
नमस्ते शयमानाय शयितायोत्थिताय च ॥ ३०.१९६॥

स्थिताय चलमानाय मुद्राय कुटिलाय च ।
नमो नर्त्तनशीलाय मुखवादित्रकारिणे ॥ ३०.१९७॥

नाट्योपहारलुब्धाय गीतवाद्यरताय च ।
नमो ज्येष्ठाय श्रेष्ठाय बलप्रमथनाय च ॥ ३०.१९८॥

कलनाय च कल्पाय क्षयायोपक्षयाय च ।
भीमदुन्दुभिहासाय भीमसेनप्रियाय च ॥ ३०.१९९॥

उग्राय च नमो नित्यं नमस्ते दशबाहवे ।
नमः कपालहस्ताय चिताभस्मप्रियाय च ॥ ३०.२००॥

विभीषणाय भीष्माय भीष्मव्रतधराय च ।
नमो विकृतवक्षाय खड्गजिह्वाग्रदंष्ट्रिणे ॥ ३०.२०१॥

पक्वाममांसलुब्धाय तुम्बवीणाप्रियाय च ।
नमो वृषाय वृष्याय वृष्णये वृषणाय च ॥ ३०.२०२॥

कटङ्कटाय चण्डाय नमः सावयवाय च ।
नमस्ते वरकृष्णाय वराय वरदाय च ॥ ३०.२०३॥

वरगन्धमाल्यवस्त्राय वरातिवरये नमः ।
नमो वर्षाय वाताय छायायै आतपाय च ॥ ३०.२०४॥

नमो रक्तविरक्ताय शोभनायाक्षमालिने ।
सम्भिन्नाय विभिन्नाय विविक्तविकटाय च ॥ ३०.२०५॥

अघोररूपरूपाय घोरघोरतराय च ।
नमः शिवाय शान्ताय नमः शान्ततराय च ॥ ३०.२०६॥

एकपाद्बहुनेत्राय एकशीर्षन्नमोऽस्तु ते ।
नमो वृद्धाय लुब्धाय संविभागप्रियाय च ॥ ३०.२०७॥

पञ्चमालार्चिताङ्गाय नमः पाशुपताय च ।
नमश्चण्डाय घण्टाय घण्टया जग्धरन्ध्रिणे ॥ ३०.२०८॥

सहस्रशतघण्टाय घण्टामालाप्रियाय च ।
प्राणदण्डाय त्यागाय नमो हिलिहिलाय च ॥ ३०.२०९॥

हूंहूङ्काराय पाराय हूंहूङ्कारप्रियाय च ।
नमश्च शम्भवे नित्यं गिरि वृक्षकलाय च ॥ ३०.२१०॥

गर्भमांसशृगालाय तारकाय तराय च ।
नमो यज्ञाधिपतये द्रुतायोपद्रुताय च ॥ ३०.२११॥

यज्ञवाहाय दानाय तप्याय तपनाय च ।
नमस्तटाय भव्याय तडितां पतये नमः ॥ ३०.२१२॥

अन्नदायान्नपतये नमोऽस्त्वन्नभवाय च ।
नमः सहस्रशीर्ष्णे च सहस्रचरणाय च ॥ ३०.२१३॥

सहस्रोद्यतशूलाय सहस्रनयनाय च ।
नमोऽस्तु बालरूपाय बालरूपधराय च ॥ ३०.२१४॥

बालानाञ्चैव गोप्त्रे च बालक्रीडनकाय च ।
नमः शुद्धाय बुद्धाय क्षोभणायाक्षताय च ॥ ३०.२१५॥

तरङ्गाङ्कितकेशाय मुक्तकेशाय वै नमः ।

नमः षट्कर्मनिष्ठाय त्रिकर्मनिरताय च ॥ ३०.२१६॥

वर्णाश्रमाणां विधिवत् पृथक्कर्मप्रवर्तिने ।
नमो घोषाय घोष्याय नमः कलकलाय च ॥ ३०.२१७॥

श्वेतपिङ्गलनेत्राय कृष्णरक्तक्षणाय च ।
धर्मार्थ काममोक्षाय क्रथाय कथनाय च ॥ ३०.२१८॥

साङ्ख्याय साङ्ख्यमुख्याय योगाधिपतये नमः ।
नमो रथ्यविरथ्याय चतुष्पथरताय च ॥ ३०.२१९॥

कृष्णा जिनोत्तरीयाय व्यालयज्ञोपवीतिने ।
ईशानवज्रसंहाय हरिकेश नमोऽस्तु ते ।
अविवेकैकनाथाय व्यक्ताव्यक्त नमोऽस्तु ते ॥ ३०.२२०॥

काम कामद कामध्न धृष्टोद्दप्तनिषूदन ।
सर्व सर्वद सर्वज्ञ सन्ध्याराग नमोऽस्तु ते ॥ ३०.२२१॥

महाबाल महाबाहो महासत्त्व महाद्युते ।
महामेघवरप्रेक्ष महाकाल नमोऽस्तु ते ॥ ३०.२२२॥

स्थूलजीर्णाङ्गजटिने वल्कलाजिनधारिणे ।
दीप्तसूर्याग्निजटिने वल्कलाजिनवाससे ।
सहस्रसूर्यप्रतिम तपोनित्य नमोऽस्तु ते ॥ ३०.२२३॥

उन्मादनशतावर्त्त गङ्गातोयार्द्धमूर्द्धज ।
चन्द्रावर्त्त युगावर्त्त मेघावर्त्त नमोऽस्तु ते ॥ ३०.२२४॥

त्वमन्नमन्नकर्त्ता च अन्नदश्च त्वमेव हि ।
अन्नस्रष्टा च पक्ता च पक्वभुक्तपचे नमः ॥ ३०.२२५॥

जरायुजोऽण्डजश्चैव स्वेदजोद्भिज्ज एव च ।
त्वमेव देवदेवशो भूतग्रामश्चतुर्विधः ॥ ३०.२२६ ।
चराचरस्य ब्रह्मा त्वं प्रतिहर्त्ता त्वमेव च ।
त्वमेव ब्रह्मविदुषामपि ब्रह्मविदां वरः ॥ ३०.२२७॥

सत्त्वस्य परमा योनिरब्वायुज्योतिषां निधिः ।
ऋक्सामानि तथोङ्कारमाहुस्त्वां ब्रह्मवादिनः ॥ ३०.२२८॥

हविर्हावी हवो हावी हुवां वाचाहुतिः सदा ।
गायन्ति त्वां सुरश्रेष्ठ सामगा ब्रह्मवादिनः ॥ ३०.२२९॥

यजुर्मयो ऋङ्मयश्च सामाथर्वमयस्तथा ।
पठ्यसे ब्रह्मविद्भिस्त्वं कल्पोपनिषदां गणैः ॥ ३०.२३०॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णावराश्च ये ।
त्वामेव मेघसङ्घाश्च विश्वस्त नितगर्ज्जितम् ॥ ३०.२३१॥

संवत्सरस्त्वमृतवो मासा मासार्द्धमेव च ।
कला काष्ठा निमेषाश्च नक्षत्राणि युगा ग्रहाः ॥ ३०.२३२॥

वृषाणां ककुदं त्वं हि गिरीणां शिखराणि च ।
सिंहो मृगाणां पततां ताक्ष्योंऽनन्तश्च भोगिनाम् ॥ ३०.२३३॥

क्षीरोदो ह्युदधीनाञ्च यन्त्राणां धनुरेव च ।
वज्रम्प्रहरणानाञ्च व्रतानां सत्यमेव च ॥ ३०.२३४॥

इच्छा द्वेषश्च रागश्च मोहः क्षामो दमः शमः ।
व्यवसायो धृतिर्लोभः कामक्रोधौ जयाजयौ ॥ ३०.२३५॥

त्वं गदी त्वं शरी चापि खट्वाङ्गी झर्झरी तथा ।
छेत्ता भेत्ता प्रहर्त्ता च त्वं नेताप्यन्तको मतः ॥ ३०.२३६॥

दशलक्षणसंयुक्तो धर्मोऽर्थः काम एव च ।
इन्द्रः समुद्राः सरितः पल्वलानि सरांसि च ॥ ३०.२३७॥

लतावल्ली तृणौषध्यः पशवो मृगपक्षिणः ।
द्रव्यकर्मगुणारम्भः कालपुष्पफलप्रदः ॥ ३०.२३८॥

आदिश्चान्तश्च मध्यश्च गायत्र्योङ्कार एव च ।
हरितो लोहितः कृष्णो नीलः पीतस्तथारुणः ॥ ३०.२३९॥

कद्रुश्च कपिलश्चैव कपोतो मेचकस्तथा ।
सुवर्णरेता विख्यातः सुवर्णश्चाप्यतो मतः ॥ ३०.२४०॥

सुवर्णनामा च तथा सुवर्णप्रिय एव च ।

त्वमिन्द्रोऽथ यमश्चैव वरुणो धनदोऽनलः ॥ ३०.२४१॥

उत्फुल्लश्चित्रभानुश्च स्वर्भानुर्भानुरेव च ।
होत्रं होता च होमस्त्वं हुतञ्च प्रहुतं प्रभुः ॥ ३०.२४२॥

सुपर्णञ्च तथा ब्रह्म यजुषां शतरुद्रियम् ।
पवित्राणां पवित्रं च मङ्गलानाञ्च मङ्गलम् ॥ ३०.२४३॥

गिरिः स्तोकस्तथा वृक्षो जीवः पुद्गल एव च ।
सत्त्वं त्वञ्च रजस्त्वञ्च तमश्च प्रजनं तथा ॥ ३०.२४४॥

प्राणोऽपानः समानश्च उदानो व्यान एव च ।
उन्मेषश्चैव मेषश्च तथा जृम्भितमेव च ॥ ३०.२४५॥

लोहिताङ्गो गदी दंष्ट्री महावक्त्रो महोदरः ।
शुचिरोमा हरिच्छमश्रुरूर्द्ध्वकेशस्त्रिलोचनः ॥ ३०.२४६॥

गीतवादित्रनृत्याङ्गो गीतवादनकप्रियः ।
मत्स्यो जली जलो जल्यो जवः कालः कली कलः ॥ ३०.२४७॥

विकालश्च सुकालश्च दुष्कालः कलनाशनः ।
मृत्युश्चैव क्षयोऽन्तश्च क्षमापायकरो हरः ॥ ३०.२४८॥

संवर्त्तकोऽन्तकश्चैव संवर्त्तकबलाहकौ ।
घटो घटीको घण्टीको चूडालोलबलो बलम् ॥ ३०.२४९॥

ब्रह्मकालोऽग्निवक्त्रश्च दण्डी मुण्डी च दण्डधृक् ।
चतुर्युगश्चतुर्वेदश्चतुर्होत्रश्चतुष्पथः ॥ ३०.२५०॥

चतुरा श्रमवेत्ता च चातुर्वर्ण्यकरश्च ह ।
क्षराक्षरप्रियो धूर्त्तोऽगण्योऽगण्यगणाधिपः ॥ ३०.२५१॥

रुद्राक्षमाल्याम्बरधरो गिरिको गिरिकप्रियः ।
शिल्पीशः शिल्पिनां श्रेष्ठः सर्वशिल्पप्रवर्त्तकः ॥ ३०.२५२॥

भगनेत्रान्तकश्चन्द्रः पूष्णो दन्तविनाशनः ।
गूढावर्त्तश्च गूढश्च गूढप्रतिनिषेविता ॥ ३०.२५३॥

तरणस्तारकश्चैव सर्वभूतसुतारणः ।
धाता विधाता सत्वानां निधाता धारणो धरः ॥ ३०.२५४॥

तपो ब्रह्म च सत्यञ्च ब्रह्मचर्यमथार्जवम् ।
भूतात्मा भूतकृद्भूतो भूतभव्यभवोद्भवः ॥ ३०.२५५॥

भूर्भुवःस्वरितश्चैव तथोत्पत्तिर्महेश्वरः ।
ईशानो वीक्षणः शान्तो दुर्दान्तो दन्तनाशनः ॥ ३०.२५६॥

ब्रह्मावर्त्त सुरावर्त्त कामावर्त्त नमोऽस्तु ते ।
कामबिम्बनिहर्त्ता च कर्णिकाररजःप्रियः ॥ ३०.२५७॥

मुखचन्द्रो भीममुखः सुमुखो दुर्मुखो मुखः ।
चतुर्मुखो बहुमुखो रणे ह्यभिमुखः सदा ॥ ३०.२५८॥

हिरण्यगर्भः शकुनिर्महोदधिः परो विराट् ।
अधर्महा महादण्डो दण्डधारी रणप्रियः ॥ ३०.२५९॥

गोतमो गोप्रतारश्च गोवृषेश्वरवाहनः ।
धर्मकृद्धर्मस्रष्टा च धर्मो धर्मविदुत्तमः ॥ ३०.२६०॥

त्रैलोक्यगोप्ता गोविन्दो मानदो मान एव च ।
तिष्ठन् स्थिरश्च स्थाणुश्च निष्कम्पः कम्प एव च ॥ ३०.२६१॥

दुर्वारणो दुर्विषदो दुःसहो दुरतिक्रमः ।
दुर्द्धरो दुष्प्रकम्पश्च दुर्विदो दुर्ज्जयो जयः ॥ ३०.२६२॥

शशः शशाङ्कः शमनः शीतोष्णं दुर्जराऽथ तृट् ।
आधयो व्याधयश्चैव व्याधिहा व्याधिगश्च ह ॥ ३०.२६३॥

सह्यो यज्ञो मृगा व्याधा व्याधीनामाकरोऽकरः ।
शिखण्डी पुण्डरीकाक्षः पुण्डरीकावलोकनः ॥ ३०.२६४॥

दण्डधरः सदण्डश्च दण्डमुण्डविभूषितः ।
विषपोऽमृतपश्चैव सुरापः क्षीरसोमपः ॥ ३०.२६५॥

मधुपश्चाज्यपश्चैव सर्वपश्च महाबलः ।
वृषाश्ववाह्यो वृषभस्तथा वृषभलोचनः ॥ ३०.२६६॥

वृषभश्चैव विख्यातो लोकानां लोकसत्कृतः ।
चन्द्रादित्यौ चक्षुषी ते हृदयञ्च पितामहः ।
अग्निरापस्तथा देवो धर्मकर्मप्रसाधितः ॥ ३०.२६७॥

न ब्रह्मा न च गोविन्दः पुराणऋषयो न च ।
माहात्म्यं वेदितुं शक्ता याथातथ्येन ते शिव ॥ ३०.२६८॥

या मूर्तयः सुसूक्ष्मास्ते न मह्यं यान्ति दर्शनम् ।
ताभिर्मां सततं रक्ष पिता पुत्रमिवौरसम् ॥ ३०.२६९॥

रक्ष मां रक्षणीयोऽहं तवानघ नमोऽस्तु ते ॥

भक्तानुकम्पी भगवान् भक्तश्चाहं सदा त्वयि ॥ ३०.२७०॥

यः सहस्राण्यनेकानि पुंसामाहृत्य दुर्द्दशः ।
तिष्ठत्येकः समुद्रान्ते स मे गोप्तास्तु नित्यशः ॥ ३०.२७१॥

यं विनिद्रा जितश्वासाः सत्त्वस्थाः समदर्शिनः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ ३०.२७२॥

सम्भक्ष्य सर्व भूतानि युगान्ते समुपस्थिते ।
यः शेते जलमध्यस्थस्तं प्रपद्येऽप्सुशायिनम् ॥ ३०.२७३॥

प्रविश्य वदने राहोर्यः सोमं ग्रसते निशि ।
ग्रसत्यर्कञ्च स्वर्भानुर्भूत्वा सोमाग्निरेव च ॥ ३०.२७४॥

येऽङ्गुष्ठमात्राः पुरुषा देहस्थाः सर्वदेहिनाम् ।
रक्षन्तु ते हि मां नित्यं नित्यमाप्याययन्तु माम् ॥ ३०.२७५॥

ये चाप्युत्पतिता गर्भादधोभागगताश्च ये ।
तेषां स्वाहाः स्वधाश्चैव आप्नुवन्तु स्वदन्तु च ॥ ३०.२७६॥

ये न रोदन्ति देहस्थाः प्राणिनो रोदयन्ति च ।
हर्षयन्ति च हृष्यन्ति नमस्तेभ्योऽस्तु नित्यशः ॥ ३०.२७७॥

ये समुद्रे नदीदुर्गे पर्वतेषु गुहासु च ।
वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु न ॥ ३०.२७८॥

चतुष्पथेषु रथ्यासु चत्वरेषु सभासु च ।
चन्द्रार्कयोर्मध्यगता ये च चन्द्रार्करश्मिषु ॥ ३०.२७९॥

रसातलगता ये च ये च तस्मात्परङ्गताः ।
नमस्तेभ्यो नमस्तेभ्यो नमस्तेभ्यश्च नित्यशः ।
सूक्ष्माः स्थूलाः कृशा ह्रस्वा नमस्तेभ्यस्तु नित्यशः ॥ ३०.२८०॥

सर्वस्त्वं सर्वगो देव सर्वभूतपतिर्भवान् ।
सर्वभूतान्तरात्मा च तेन त्वं न निमन्त्रितः ॥ ३०.२८१॥

त्वमेव चेज्यसे यस्माद्यज्ञैर्विविधदक्षिणैः ।
त्वमेव कर्त्ता सर्वस्य तेन त्वं न निमन्त्रितः ॥ ३०.२८२॥

अथ वा मायया देव मोहितः सूक्ष्मया त्वया ।
एतस्मात् कारणाद्वापि तेन त्वं न निमन्त्रितः ॥ ३०.२८३॥

प्रसीद मम देवेश त्वमेव शरणं मम ।
त्वं गतिस्त्वं प्रतिष्ठा च न चान्यास्ति न मे गतिः ॥ ३०.२८४॥

स्तुत्वैवं स महादेवं विरराम प्रजापतिः ।
भगवानपि सुप्रीतः पुनर्दक्षमभाषत ॥ ३०.२८५॥

परितुष्टोऽस्मि ते दक्ष स्तवेनानेन सुव्रत ।
बहुनात्र किमुक्तेन मत्समीपं गमिष्यसि ॥ ३०.२८६॥

अथैनमब्रवीद्वाक्यं त्रैलोक्याधिपतिर्भवः ।
कृत्वाश्वासकरं वाक्यं वाक्यज्ञो वाक्यमाहतम् ॥ ३०.२८७॥

दक्ष दक्ष न कर्त्तव्यो मन्युर्विघ्नमिमं प्रति ।
अहं यज्ञहा न त्वन्यो दृश्यते तत्पुरा त्वया ॥ ३०.२८८॥

भूयश्च तं वरमिमं मत्तो गृह्णीष्व सुव्रत ।
प्रसन्नवदनो भूत्वा त्वमेकाग्रमनाः शृणु ॥ ३०.२८९॥

अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
प्रजापते मत्प्रसादात् फलभागी भविष्यसि ॥ ३०.२९०॥

वेदान् षडङ्गानुद्धृत्य साङ्ख्यान्योगांश्च कृत्स्नशः ।
तपश्च विपुलं तस्वा दुश्चरं देववदानवैः ॥ ३०.२९१॥

अर्थैर्द्दशार्द्धसंयुक्तैर्गूढमप्राज्ञनिर्म्मितम् ।
वर्णाश्रमकृतैर्धर्मैर्विपरीतं क्वचित्समम् ॥ ३०.२९२॥

श्रुत्यर्थैरध्यवसितं पशुपाशविमोक्षणम् ।
सर्वेषामाश्रमाणान्तु मया पाशुपतं व्रतम् ।
उत्पादितं शुभं दक्ष सर्वपापविमोक्षणम् ॥ ३०.२९३॥

अस्य चीर्णस्य यत्सम्यक् फलं भवति पुष्कलम् ।
तदस्तु ते महाभाग मानसस्त्यज्यतां ज्वरः ॥ ३०.२९४॥

एवमुक्त्वा महादेवः सपत्नीकः सहानुगः ।
अदर्शनमनुप्राप्तो दक्षस्यामितविक्रमः ॥ ३०.२९५॥

अवाप्य च तदा भागं यथोक्तं ब्रह्मणा भवः ।
ज्वरञ्च सर्वधर्मज्ञो बहुधा व्यभजत्तदा ।
शान्त्यर्थं सर्वभूतानां शृणुध्वं तत्र वै द्विजाः ॥ ३०.२९६॥

शीर्षाभितापो नागानां पर्वतानां शिलारुजः ।
अपान्तु नालिकां विद्यान्निर्मोकम्भुजगेष्वपि ॥ ३०.२९७॥

स्वौरकः सौरभेयाणामूषरः पृथिवीतले ।
इभा नामपि धर्मज्ञ दृष्टिप्रत्यवरोधनम् ॥ ३०.२९८॥

रन्ध्रोद्भूतं तथाश्वानां शिखोद्भेदश्च बर्हिणाम् ।
नेत्ररोगः कोकिलानां ज्वरः प्रोक्तो महात्मभिः ॥ ३०.२९९॥

अजानां पित्तभेदश्च सर्वेषामिति नः श्रुतम् ।
शुकानामपि सर्वेषां हिमिका प्रोच्यते ज्वरः ।
शार्दूलेष्वपि वै विप्राः श्रमो ज्वर इहोच्यते ॥ ३०.३००॥

मानुषेषु तु सर्वज्ञ ज्वरो नामैष कीर्तितः ।
मरणे जन्मनि तथा मध्ये च विशते सदा ॥ ३०.३०१॥

एतन्माहेश्वरं तेजो ज्वरो नाम सुदारुणः ।
नमस्यश्चैव मान्यश्च सर्वप्राणिभिरीश्वरः ॥ ३०.३०२॥

इमां ज्वरोत्पत्तिमदीनमानसः पठेत्सदा यः सुसमाहितो नरः ।
विमुक्तरोगः स नरो मुदा युतो लभेत कामान् स यथामनीषितान् ॥ ३०.३०३॥

दक्षप्रोक्तं स्तवञ्चापि कीर्त्तयेद्यः शृणोति वा ।
नाशुभं प्राप्नुयात् किञ्चिद्दीर्घञ्चायुरवाप्नुयात् ॥ ३०.३०४॥

यथा सर्वेषु देवेषु वरिष्ठो योगवान् हरः ।
तथा स्तवो वरिष्ठोऽयं स्तवानां ब्रह्मनिर्मितः ॥ ३०.३०५॥

यशोराज्यसुखैश्वर्यवित्तायुर्धनकाङ्क्षिभिः ।
स्तोतव्यो भक्तिमास्थाय विद्याकामैश्च यत्नतः ॥ ३०.३०६॥

व्याधितो दुःखितो दीनश्चौरत्रस्तो भयार्दितः ।
राजकार्यनियुक्तो वा मुच्यते महतो भयात् ॥ ३०.३०७॥

अनेन चैव देहेन गणानां स गणाधिपः ।
इह लोके सुखं प्राप्य गण एवोपपद्यते ॥ ३०.३०८॥

न च यक्षाः पिशाचा वा न नागा न विनायकाः ।
कुर्युर्विघ्नं गृहे तस्य यत्र संस्तूयते भवः ॥ ३०.३०९॥

शृणुयाद्वा इदं नारी सुभक्त्या ब्रह्मचारिणी ।
पितृभिर्भर्तृपक्षाभ्यां पूज्या भवति देववत् ॥ ३०.३१०॥

शृणुयाद्वा इदं सर्वं कीर्त्तयेद्वाप्यभीक्ष्णशः ।
तस्य सर्वाणि कार्याणि सिद्धिं गच्छन्त्यविघ्नतः ॥ ३०.३११॥

मनसा चिन्तितं यच्च यच्च वाचाप्युदाहृतम् ।
सर्वं सम्पद्यते तस्य स्तवनस्यानुकीर्त्तनात् ॥ ३०.३१२॥

देवस्य सगुहस्याथ देव्या नन्दीश्वरस्य तु ।
बलिं विभवतः कृत्वा दमेन नियमेन च ॥ ३०.३१३॥

ततः स युक्तो गृह्णीयान्नामान्याशु यथाक्रमम् ।
ईप्सितान् लभतेऽत्यर्थं कामान् भोगांश्च मानवः ।
मृतश्च स्वर्गमाप्नोति स्त्रीसहस्रपरिवृतः ॥ ३०.३१४॥

सर्व कर्मसु युक्तो वा युक्तो वा सर्वपातकैः ।
पठन् दक्षकृतं स्तोत्रं सर्वपापैः प्रमुच्यते ।
मृतश्च गणसालोक्यं पूज्यमानः सुरासुरैः ॥ ३०.३१५॥

वृषेव विधियुक्तेन विमानेन विराजते ।
आभूतसम्प्लवस्थायी रुद्रस्यानुचरो भवेत् ॥ ३०.३१६॥

इत्याह भगवान् व्यासः पराशरसुतः प्रभुः ।
नैतद्वेदयते कश्चिन्नेदं श्राव्यन्तु कस्यचित् ॥ ३०.३१७॥

श्रुत्वैतत्परमं गुह्यं येऽपि स्युः पापकारिणः ।
वैश्याः स्त्रियश्च शूद्राश्च रुद्रलोकमवाप्नुयुः ॥ ३०.३१८॥

श्रावयेद्यस्तु विप्रेभ्यः सदा पर्वसु पर्वसु ।
रुद्रलोकमवाप्नोति द्विजो वै नात्र संशयः ॥ ३०.३१९॥

इति श्रीमहापुराणे वायुप्रोक्ते दक्षशापवर्णनं नाम त्रिंशोऽध्यायः ॥ ३०॥

॥ श्रीशिवरहस्यान्तर्गतं शिवसहस्रनामस्तोत्रम् ॥

॥ शिवरहस्ये पञ्चमांशे चत्वारिंशोऽध्यायः ॥

देवी -
श्रुतं सुदर्शनाख्यानं त्वत्तो विस्मापनं मम ।
प्रदोषे पापिना तेन दृष्टश्चान्यार्चितः शिवः ॥ १॥

शेषेण नामसाहस्रैस्त्वं स्तुतः कथमीश्वर ।
तन्नाम्नां श्रवणेच्छा मे भूयसी भवति प्रभो ॥ २॥

सूतः -
तस्मिन् कैलासशिखरे सुखासीनं महेश्वरम् ।
प्रणम्य प्रार्थयामास सा देवी जगदंबिका ॥ ३॥

तदा देव्या महादेवः प्रार्थितः सर्वकामदः ।
भवो भवानीमाहेत्थं सर्वपापप्रणाशकम् ॥ ४॥

फणीशो मुखसाहस्रैर्यानि नामानि चोक्तवान् ।
तानि वः सम्प्रवक्ष्यामि यथा मम गुरोः श्रुतम् ॥ ५॥

ईश्वरः -
ऋषिः छन्दो दैवतं च तान्यहं क्रमशोंऽबिके ।
सहस्रनाम्नां पुण्यं मे फणिन्द्रः कृतवानुमे ॥ ६॥

ऋषिस्तस्य हि शेषोऽयं छन्दोऽनुष्टुप् प्रकीर्तितम् ।
देवतास्याहमीशानि सर्वत्र विनियोजनम् ॥ ७॥

ध्यानं ते कथयाम्यद्य श्रूणु त्वमगकन्यके ।

कैलासे सुहिरण्यविष्टरवरे देव्या समालिङ्गितं
नन्द्याद्यैर्गणपैः सदा परिवृतं वन्दे शिवं सुन्दरम् ।
भक्ताघौघनिकृन्तनैकपरशुं बिभ्राणमिन्दुप्रभं
स्कन्दाद्यैर्गजवक्त्र (?) सेवितपदं ध्यायामि सांबं सदा ॥ ८॥

एवं मामबिके ध्यात्वा नामानि प्रजपेत्ततः ।
हृत्पद्मसद्मसंस्थं मां सर्वाभीष्टार्थसिद्धये ॥ ९॥

पुण्यकालेषु सर्वेषु सोमवारे विशेषतः ।
बिल्वपत्रैः पङ्कजैश्च पुण्यनामानि शङ्करि ॥ १०॥

पूजयेन्नामसाहस्रैः सर्वार्थप्राप्तये शिवे ।
यो यं कामयते कामं तं तमाप्नोति शङ्करि ॥ ११॥

धनार्थी लभते वित्तं कन्यार्थी कन्यकां तथा ।
राज्यार्थी राज्यमाप्नोति मोक्षार्थी मोक्षमाप्नुयात् ॥ १२॥

शृणु देवि परं पुण्यं मातृकानामनुत्तमम् ।
सहस्रं प्रजपेन्नित्यं धर्मकामार्थमोक्षभाक् ॥ १३॥

ईश्वरः -
ओंकारनिलयात्मस्थः ओंकारार्थैकवाचकः ।
ओंकारेशाकृतिरोमितिशब्दकृतस्तुतिः ॥ १४॥

ओंकारकुण्डनिलयलिङ्गपूजनपापहृत् ।
नमिताशेषदेवादिर्नदीपुलितसंस्थितः ॥ १५॥

नन्दिवाद्यप्रियो नित्यो नामपारायणप्रियः ।
महेन्द्रनिलयो मानि मानसान्तरपापभित् ॥ १६॥

मयस्करो महायोगी मायाचक्रप्रवर्तकः ।
शिवः शिवतरः शीतः शीतांशुकृतभूषणः ॥ १७॥

धनुःशरकरो ध्याता धर्माधर्मप्रायाणः ।
आत्मा आतार्य आलाद्य अनङ्गशरखण्डनः ॥ १८॥

ईशान ईड्य ईघ्र्यश्च इभमस्तकसंस्तुतः ।
उमासंश्लिष्टवामाङ्ग उशीनरनृपार्चितः ॥ १९॥

उदुम्बरफलप्रीत उमादिसुरपूजितः ।
ऋजीषीकृतभृचक्रो रिपुप्रमथनोर्जितः ॥ २०॥

लिङ्गार्चकजनप्रीतो लिङ्गी लिङ्गसमप्रियः ।
लिपिप्रियो बिन्दुहीनो लीलाकृतजगन्त्त्रयः ॥ २१॥

ऐन्द्रीदिक्पतिसंयुक्त ऐश्वर्यादिफलप्रदः ।

औत्तानपादपूज्याङ्घ्रिरौमादिसुरपूजितः ॥ २२॥

कल्याणाचलकोदण्डः कामितार्थफलप्रदः ।
कस्तूरीतिलकप्रीतः कर्पूराभकलेवरः ॥ २३॥

करन्धमसुतप्रीतः कल्पादिपरिवर्जितः ।
कल्पितानेकभूतादिः कलिकल्मषनाशनः ॥ २४॥

कमलामलसन्नेत्रः कमलापतिपूजितः ।
खगोल्कादित्यवरदः खञ्जरीटवरप्रदः ॥ २५॥

खर्जुरवनमध्यस्थः खण्डिताखण्डलीकरः ।
खगः खड्गहरः खण्डः खगगः खाकृतिः खसः ॥ २६॥

खण्डपर्शुः खण्डधनः खण्डितारातिमण्डलः ।
गन्धर्वगणसुप्रीतो गन्धधृक् गर्वनाशकः ॥ २७॥

गङ्गाधरो गोगणेशो गणेशवरपुत्रकः ।
गतिदो गदहा गन्धी गन्धमाल्यवरार्चितः ॥ २८॥

गगनस्थो गणपतिर्गगनाभोगभूषणः ।
घण्टाकर्णप्रियो घण्टी घटजस्तुतिसुप्रियः ॥ २९॥

घोटकप्रियपुत्रश्च धर्मकालो घनाकृतिः ।
घनवाहो घृताध्यक्षो घनघोषो घटेश्वरः ॥ ३०॥

घटानादकरप्रीतो घटीभूतमहागिरिः ।
चन्द्रचूडश्चन्द्रकरश्चन्दनार्द्रश्चतुष्पथः ॥ ३१॥

चमसोद्भेदमध्यस्थश्चण्डकोपश्चतुर्मुखः ।
चक्षुःश्रोत्रमहाहारश्चण्डिकेशवरप्रदः ॥ ३२॥

चेतोजन्महरश्चण्डश्चातुर्होत्रप्रियश्चरः ।
चतुर्मुखमुखस्तुत्यश्चतुर्वेदश्चराचरः ॥ ३३॥

चण्डभानुकरान्तःस्थश्चतुर्मूर्तिवपुःस्थितः ।
छादितानेकलोकादिः छन्दसां गणमध्यगः ॥ ३४॥

छत्रचामरशोभाढ्यः छन्दोगगतिदायकः ।
जङ्गमाजङ्गमाकारो जगन्नाथो जगद्गतः ॥ ३५॥

जह्नुकन्याजटो जप्यो जेता जत्रुर्जनार्तिहा ।
जम्भारातिर्जनप्रीतो जनको जनिकोविदः ॥ ३६॥

जनार्दनार्दनो जामिजात्यादिपरिवर्जितः ।
झणज्झणान्घ्रिजारावो झङ्कारोज्झितदुष्क्रियः ॥ ३७॥

टङ्कप्रियष्टंकृतिकष्टंकभेदी टकारकः ।
टादिवर्णप्रियष्ठान्तो ढक्कानादप्रियो रसः ॥ ३८॥

डामरितन्त्रमध्यस्थो डमरुध्वनिशोभितः ।
ढक्काध्वनिकृतानल्पबधिरीकृतदिङ्मुखः ॥ ३९॥

णकारो णणुकोत्थादिर्णान्तकृण्णविमोचकः ।
तस्करस्ताम्रकस्तार्क्ष्यस्तामसादिगुणोज्झितः ॥ ४०॥

तरुमूलप्रियस्तातस्तमसां नाशकस्तटः ।
थानासुरहरः स्थाता स्थाणुः स्थानप्रियः स्थिरः ॥ ४१॥

दाता दानपतिर्दान्तो दन्दशूकविभुषितः ।
दर्शनियो दीनदयो दण्डितारातिमण्डलः ॥ ४२॥

दक्षयज्ञहरो देवो दानवारिर्दमोदयः ।
दत्तात्रेयप्रियो दण्डी दाडिमीकुसुमप्रियः ॥ ४३॥

धता धनाधिपसखो धनधान्यप्रदो धनम् ।
धामप्रियोऽन्धसां नाथो धर्मवाहो धनुर्धरः ॥ ४४॥

नमस्कारप्रियो नाथो नमिताशेषदुःखहृत् ।
नन्दिप्रियो नर्मसखो नर्मदातीरसंस्थितः ॥ ४५॥

नन्दनो नमसामीशो नानारूपो नदीगतः ।
नामप्रीतो नामरूपगुणकर्मविवर्जितः ॥ ४६॥

पत्तीनां च पतिः पार्यः परमात्मा परात्परः ।
पङ्कजासनपूज्याङ्घ्रिः पद्मनाभवरप्रदः ॥ ४७॥

पन्नगाधिपसद्धारः पशूनां पतिपावकः ।
पापहा पण्डितः पान्थो पादपोन्मथनः परः ॥ ४८॥

फणीफणालसम्मौलिः फणिकङ्कणसत्करः ।
फणिता नेकवेदोक्तिः फणिमाणिक्यभूषितः ॥ ४९॥

बन्धमोचनकृद्बन्धुर्बन्धुरालकशोभितः ।
बली बलवतां मुख्यो बलिपुत्रवरप्रदः ॥ ५०॥

बाणासुरेन्द्रपूज्याङ्घ्रिर्बाणलिङ्गो बहुपदः ।
वन्दीकृतागमो बालपालको बहुशोभितः ॥ ५१॥

भवादिर्भवहा भव्यो भवो भावपरायणः ।
भयहृद्भवदो भूतो भण्डासुरवरप्रदः ॥ ५२॥

भगाक्षिमथनो भर्गो भवानीशो भयङ्करः ।
भङ्कारो भावुकदो भस्माभ्यक्ततनुर्भटः ॥ ५३॥

मयस्करो महादेवो मायावी मानसान्तरः ।
मायातीतो मन्मथारिर्मधुपोऽथ मनोन्मनः ॥ ५४॥

मध्यस्थो मधुमांसात्मा मनोवाचामगोचरः ।
मण्डितो मण्डनाकारो मतिदो मानपालकः ॥ ५५॥

मनस्वी मनुरूपश्च मन्त्रमूर्तिर्महाहनुः ।
यशस्करो यन्त्ररूपो यमिमानसपावनः ॥ ५६॥

यमान्तकरणो यामी यजमानो यदुर्यमी ।
रमानाथार्चितपदो रम्यो रतिविशारदः ॥ ५७॥

रंभाप्रीतो रसो रात्रिचरो रावणपूजितः ।
रङ्गपादो रन्तिदेवो रविमण्डलमध्यगः ॥ ५८॥

रथन्तरस्तुतो रक्तपानो रथपती रजः ।
रथात्मको लम्बतनुर्लाङ्गली लोलगण्डकः ॥ ५९॥

ललामसोमलूतादिर्ललितापूजितो लवः ।

वामनो वायुरूपश्च वराहमथनो वटुः ॥ ६०॥

वाक्यजातो वरो वार्यो वरुणेड्यो वराश्रयः ।
वपुर्धरो वर्षवरो वरियान् वरदो वरः ॥ ६१॥

वसुप्रदो वसुपतिर्वन्दारुजनपालकः ।
शान्तः शमपरः शास्ता शमनान्तकरः शठः ॥ ६२॥

शङ्खहस्तः शत्रुहन्ता शमिताखिलदुष्कृतः ।
शरहस्तः शतावर्तः शतक्रतुवरप्रदः ॥ ६३॥

शम्भुः शम्याकपुष्पार्च्यः शङ्करः शतरुद्रगः ।
शम्याकरः शान्तमनाः शान्तः शशिकलाधरः ॥ ६४॥

षडाननगुरुः षण्डः षट्कर्मनिरतः षगुः ।
षड्जादिरसिकः षष्ठः षष्ठीप्रीतः षडङ्गवान् ॥ ६५॥

षडूर्मिरहितः शष्प्यः षिद्गः षाड्गुण्यदायकः ।
सत्यप्रियः सत्यधामा संसाररहितः समः ॥ ६६॥

सखा सन्धानकुशलः सर्वसम्पत्प्रदायकः ।
सगरः सागरान्तस्थः सत्राशः सरणः सहः ॥ ६७॥

सांबः सनातनः साधुः सारासारविशारदः ।
सामगानप्रियः सारः सरस्वत्या सुपूजितः ॥ ६८॥

हतारातिर्हंसगतिर्हाहाहूहूस्तुतिप्रियः ।
हरिकेशो हरिद्राङ्गो हरिन्मणिसरोहठः ॥ ६९॥

हरिपूज्यो हरो हार्यो हरिणाङ्कशिखण्डकः ॥

हाहाकारादिरहितो हनुनासो हहुंकृतः ॥ ७०॥

ललाननो लतासोमो लक्षमीकान्तवरप्रदः ।
लम्बोदरगुरुर्लभ्यो लवलीशो लुलायगः ॥ ७१॥

क्षयद्वीरः क्षमायुत्तः क्षयादिरहितः क्षमी ।
क्षत्रियान्तकरः क्षान्तः क्षात्रधर्मप्रवर्तकः ॥ ७२॥

क्षयिष्णुवर्धनः क्षान्तः क्षपानाथकलधरः ।
क्षपादिपूजनप्रीतः क्षपणान्तः क्षराक्षरः ॥ ७३॥

रुद्रो मन्युः सुधन्वा च बाहुमान् परमेश्वरः ।
स्विषुः स्विष्टकृदीशानः शरव्याधारको युवा॥ ७४॥

अघोरस्तनुमान् देवो गिरीशः पाकशासनः ।
गिरित्रः पुरुषः प्राणः पञ्चप्राणप्रवर्तकः ॥ ७५॥

अध्यवोचो महादेव अधिवक्ता महेश्वरः ।
ईशानः प्रथमो देवो भिषजां पतिरीश्वरः ॥ ७६॥

ताम्रोऽरुणो विश्वनाथो बभ्रुश्चैव सुमङ्गलः ।
नीलग्रीवः शिवो हृष्टो देवदेवो विलोहितः ॥ ७७॥

गोपवश्यो विश्वकर्ता उदहार्यजनेक्षितः ।
विश्वदृष्टः सहस्राक्षो मीढुष्ठो भगवन् हरः ॥ ७८॥

शतेषुधिः कपर्दी च सोमो मीढुष्टमो भवः ।
अनाततश्चातिधृष्णुः सत्वानां रक्षकः प्रभुः ॥ ७९॥

विश्वेश्वरो महादेवस्त्र्यंबकस्त्रिपुरान्तकः ।
त्रिकाग्निकालः कालाग्निरुद्रो नीलोऽधिपोऽनिलः ॥ ८०॥

सर्वेश्वरः सदा शम्भुः श्रीमान् मृत्युञ्जयः शिवः ।
स्वर्णबाहुः सैन्यपालो दिशाधीशो वनस्पतिः ॥ ८१॥

हरिकेशः पशुपतिरुग्रः सस्पिञ्जरोऽन्तकः ।
त्विषीमान् मार्गपो बभ्रुर्विव्याधी चान्नपालकः ॥ ८२॥

पुष्टो भवाधिपो लोकनाथो रुद्राततायिकः ।
क्षेत्रशः सूतपोऽहन्त्यो वनपो रोहितः स्थपः ॥ ८३॥

वृक्षेशो मन्त्रजो वाण्यो भुवन्त्यो वारिवस्कृतः ।
ओषदीशो महाघोषः क्रन्दनः पत्तिनायकः ॥ ८४॥

कृत्स्नवीती धावमनः सत्वनां पतिरव्ययः ।

सहमानोऽथ निर्व्याधिरव्याधिः कुकुभो नटः ॥ ८५॥

निषङ्गी स्तेनपः कक्ष्यो निचेरुः परिचारकः ।
आरण्यपः सृकावि च जिघांसुर्मुष्णपोऽसिमान् ॥ ८६॥

नक्तश्चरः प्रकृन्तश्च उष्णीषी गिरिसञ्चरः ।
कुलुञ्च इषुमान् धन्वी आतन्वान् प्रतिधानवान् ॥ ८७॥

आयच्छो विसृजोऽप्यात्मा वेधनो आसनः परः ।
शयानः स्वापकृत् जाग्रत् स्थितो धावनकारकः ॥ ८८॥

सभापतिस्तुरङ्गेश उगणस्तृंहतिर्गुरुः ।
विश्वो व्रातो गणो विश्वरुपो वैरुप्यकारकः ॥ ८९॥

महानणीयान् रथपः सेनानीः क्षत्रसंग्रहः ।
तक्षा च रथकारश्च कुलालः कर्मकारकः ॥ ९०॥

पुञ्जिष्ठश्च निषादश्च इषुकृद्धन्वकारकः ।
मृगयुः श्वानपो देवो भवो रुद्रोऽथ शर्वकः ॥ ९१॥

पशुपो नीलकण्ठश्च शितिकण्ठः कपर्दभृत् ।
व्युप्तकेशः सहस्राक्षः शतधन्वा गिरीश्वरः ॥ ९२॥

शिपिविष्टोऽथ मीढुष्ट इषुमान् ह्रस्ववामनः ।
बहुर्वर्षवया वृद्धः संवृद्ध्वा पथमोऽग्रियः ॥ ९३॥

आशुश्चैवाजिरः शीघ्र्यः शीभ्य ऊर्म्योऽथ वस्वनः ।
स्रोतो द्वीप्यस्तथा ज्येष्ठः कनिष्ठः पूर्वजोऽपरः ॥ ९४॥

मध्यश्चाथाप्रगल्भश्च ....
आशुषेणश्चाशुरथः शूरो वै भिन्दिवर्मधृक् ॥ ९५॥

वरूथी विरुमी कावची श्रुतसेनोऽथ दुन्दुभिः ।
धृष्णुश्च प्रहितो दूतो निषङ्गी तीक्ष्णसायकः ॥ ९६॥

आयुधी स्वायुधी देव उपवीती सुधन्वधृक् ।
स्रुत्यः पथ्यस्तथा काट्यो नीप्यः सूद्यः सरोद्भवः ॥ ९७॥

नाद्यवैशन्तकूप्याश्चावट्यो वर्ष्यो मेघ्योऽथ वैद्युतः।
ईध्र्य आतप्य वातोत्थो रश्मिजो वास्तवोऽस्तुपः ॥ ९८॥

सोमो रुद्रस्तथा ताम्र अरुणः शङ्गः ईश्वरः ।
उग्रो भीमस्तथैवाग्रेवधो दूरेवधस्तथा ॥ ९९॥

हन्ता हनीयान् वृक्षश्च हरिकेशः प्रतर्दनः ।
तारः शम्भुर्मयोभूश्च शङ्करश्च मयस्करः ॥ १००॥

शिवः शिवतरस्तीर्थ्यः कूल्यः पार्यो वार्यः प्रतारणः ।
उत्तारणस्तथालाद्य आर्तायः शष्प्यफेनजः ॥ १०१॥

सिकत्यश्च प्रवाह्यश्च इरिण्यः प्रमथः किंशिलः ।
क्षयणः कूलगो गोष्ठ्यः पुलत्स्यो गृह्य एव च ॥ १०२॥

तल्प्यो गेह्यस्तथा काट्यो गह्वरेष्ठो ह्रदोद्भवः ।
निवेष्ट्यः पासुमध्यस्थो रजस्यो हरितस्थितः ॥ १०३॥

शुष्क्यो लोप्यस्तथोलप्य ऊर्म्यः सूर्म्यश्च पर्णजः ।
पर्णशद्योऽपगुरकः अभिघ्नोत्खिद्यकोविदः ॥ १०४॥

अवः (?) किरिक ईशानो देवादिहृदयान्तरः ।
विक्षीणको विचिन्वत्क्यः आनिर्ह आमिवत्ककः ॥ १०५॥

द्रापिरन्धस्पतिर्दाता दरिद्रन्निललोहितः ।
तवस्वांश्च कपर्दीशः क्षयद्विरोऽथ गोहनः ॥ १०६॥

पुरुषन्तो गर्तगतो युवा मृगवरोग्रकः ।
मृडश्च जरिता रुद्रो मीढ्यो देवपतिर्हरिः ॥ १०७॥

मीढुष्टमः शिवतमो भगवानर्णवान्तरः ।
शिखी च कृत्तिवासाश्च पिनाकी वृष्भस्थितः ॥ १०८॥

अग्नीषुश्च वर्षेषुर्वातेषुश्च ......
पृथिवीस्थो दिविष्टश्च अन्तरिक्षस्थितो हरः ॥ १०९॥

अप्सु स्थितो विश्वनेता पथिस्थो वृक्षमूलगः ।
भूताधिपः प्रमथप ..... ॥ ११०॥

अवपलः सहस्रास्यः सहस्रनयनश्रवाः ।
ऋग्गणात्मा यजुर्मध्यः साममध्यो गणाधिपः ॥ १११॥

उर्म्यर्वशीर्षपरमः शिखास्तुत्योऽपसूयकः ।
मैत्रायणो मित्रगतिस्तण्डुप्रीतो रिटिप्रियः ॥ ११२॥

उमाधवो विश्वभर्ता विश्वहर्ता सनातनः ।
सोमो रुद्रो मेधपतिर्वंकुर्वै मरुतां पिता॥ ११३॥

....... अरुषो अध्वरेश्वरः ।
जलाषभेषजो भूरिदाता सुजनिमा सुरः ॥ ११४॥

सम्राट् पुरांभिद् दुःखस्थः सत्पतिः पावनः क्रतुः ।
हिरण्यरेता दुर्धर्षो विश्वाधिक उरुक्रमः ॥ ११५॥

गुरुगायोऽमितगुणो महाभूतस्त्रिविक्रमः ।
अमृतो अजरोऽजय्यो रुद्रोऽग्निः पुरुषो विराट् ॥ ११६॥

तुषाराट्पूजितपदो महाहर्षो रसात्मकः ।
महर्षिबुद्धिदो गोप्ता गुप्तमन्त्रो गतिप्रदः ॥ ११७॥

गन्धर्वगानप्रीतात्मा गीतप्रीतोरुशासनः ।
विद्वेषणहरो हार्यो हर्षक्रोधविवर्जितः ॥ ११८॥

भक्तप्रियो भक्तिवश्यो भयहृद्भूतसङ्धभित् ।
भुवनेशो भूधरात्मा विश्ववन्द्यो विशोषकः ॥ ११९॥

ज्वरनाशो रोगनाशो मुञ्जिकेशो वरप्रदः ।
पुण्डरीकमहाहारः पुण्डरीकत्वगम्बरः ॥ १२०॥

आखण्डलमुखस्तुत्यः कुण्डली कुण्डलप्रियः ।
चण्डांशुमण्डलान्तस्थः शशिखण्डशिखण्डकः ॥ १२१॥

चण्डतनाण्डवसन्नाहश्चण्डकोपोऽखिलाण्डगः ।
चण्डिकापूजितपदो मण्डनाकल्पकाण्डजः ॥ १२२॥

रणशौण्डो महादण्डस्तुहुण्डवरदायकः ।

कपालमालाभरणस्तारणः शोकहारणः ॥ १२३॥

विधारणः शूलकरो घर्षणः शत्रुमारणः ।
गङ्गाधरो गरधरस्त्रिपुण्ड्रावलिभासुरः ॥ १२४॥

शम्बरारिहरो दक्षहरोऽन्धकहरो हरः ।
विश्वजिद्गोजिदीशानो अश्वजिद्धनजित् तथा ॥ १२५॥

उर्वराजिदुद्वज्जिच्च सर्वजित् सर्वहारकः ।
मन्दारनिलयो नन्दः कुन्दमालाधरोऽम्बुदः ॥ १२६॥

नन्दिप्रीतो मन्दहासः सुरवृन्दनिषेवितः ।
मुचुकुन्दार्चितपदो द्वन्द्वहीनेन्दिरार्चितः ॥ १२७॥

विश्वाधारो विश्वनेता वीतिहोत्रो विनीतकः ।
शङ्करः शाश्वतः शास्ता सहमानः सहस्रदः ॥ १२८॥

भीमो महेश्वरो नित्य अंबरान्तरनर्तनः ।
उग्रो भवहरो धौम्यो धीरोदात्तो विराजितः ॥ १२९॥

वञ्चको नियतो विष्णुः परिवञ्चक ईश्वरः ।
उमावरप्रदो मुण्डी जटिल शुचिलक्षणः ॥ १३०॥

चर्माम्बरः कान्तिकरः कङ्कालवरवेषधृक् ।
मेखली अजिनी दण्डी कपाली मेखलाधरः ॥ १३१॥

सद्योजातः कालिपतिर्वरेण्यो वरदो मुनिः ।
वसाप्रियो वामदेवस्तत्पूर्वो वटमूलग ॥ १३२॥

उलूकरोमा घोरात्मा लास्यप्रीतो लघुः स्थिरः ।
अणोरणीयानीशानः सुन्दरभ्रूः सुताण्डवः ॥ १३३॥

किरीटमालाभरणो राजराजलसद्गतिः ।
हरिकेशो मुञ्जिकेशो व्योमकेशो यशोधरः ॥ १३४॥

पातालवसनो भर्ता शिपिविष्टः कृपाकरः ।
हिरण्यवर्णो दिव्यात्मा वृषधर्मा विरोचनः ॥ १३५॥

दैत्येन्द्रवरदो वैद्यः सुरवन्द्योऽघनाशकः ।
आनन्देशः कुशावर्तो नन्द्यावर्तो मधुप्रियः ॥ १३६॥

प्रसन्नात्मा विरूपाक्षो वनानां पतिरव्ययः ।
मस्तकादो वेदवेद्यः सर्वो ब्रह्मौदनप्रियः ॥ १३७॥
पिशङ्गितजटाजूटस्तडिल्लोकविलोचनः ।
गृहाधारो ग्रामपालो नरसिंहविनाशकः ॥ १३८॥

मत्स्यहा कूर्मापृष्ठास्थिधरो भूदारदारकः ॥
विधीन्द्रपूजितपदः पारदो वारिधिस्थितः ॥ १३९॥

महोदयो महादेवो महाबीजो महाङ्गधृक् ।
उलूकनागाभरणो विधिकन्धरपातनः ॥ १४०॥

आकाशकोशो हार्दात्मा मायावी प्रकृतेः परः ।
शुल्कस्त्रिशुल्कस्त्रिमधुस्त्रिसुपर्णः षडङ्गवित् ॥ १४१॥

ललनाजनपूज्यांघ्रिर्लङ्कावासोऽनिलाशनः ।
विश्वतश्चक्षुरीशानो विश्वतोबाहुरीश्वरः ॥ १४२॥

सर्वात्मा भावनागम्यः स्वतन्त्रः परमेश्वरः ।
विश्वभक्षो विद्रुमाक्षः सर्वदेवशिरोमणिः ॥ १४३॥

ब्रहम सत्यं तथानन्दो ज्ञानानन्दमहाफलः ।

ईश्वरः -
अष्टोत्तरं महादेवि शेषाशेषमुखोद्गतम् ।
इत्येतन्नामसाहस्रं रहस्यं कथितं मया॥ १४४॥

पवित्रमिदमायुष्यं पठतां शृण्वतां सदा।
यस्त्वेतन्नमसाहस्रैः बिल्वैः पङ्कजकुड्मलैः ॥ १४५॥

पूजयेत् सर्वकालेषु शिवरात्रौ महेश्वरि ।
तस्य मुक्तिं ददामीशे सत्यं सत्यं न संशयः ॥ १४६॥

मम प्रियकरं ह्येतत् फणिना फणितं शुभम् ।
पठेत् सर्वान् लभेतैव कामानायुष्यमेव च ॥ १४७॥

नामसाहस्रपाठी स यमलोकं न पश्यति ।
कल्याणीं च लभेद्गौरि गतिं नाम्नां च वैभवात् ॥ १४८॥

नाख्येयं गोप्यमेतद्धि नाभक्ताय कदाचन ।
न प्रकाश्यमिदं देवि मातृकारुद्रसंहितम् ॥ १४९॥

भक्तेषु लभते नित्यं भक्तिं मत्पादयोर्दृढाम् ।
दत्वाऽभक्तेषु पापात्मा रौरवं नरकं व्रजेत् ॥ १५०॥

सूतः -
इति शिववचनं निशम्य गौरी प्रणयाच्च प्रणता शिवाङ्घ्रिपद्मे ।
सुरवरतरुसुन्दरोरुपुष्पैरभिपूज्य प्रमथाधिपं तुतोष ॥ १५१॥

तुष्टाव कष्टहरमिष्टदमष्टदेहं
    नष्टाघसंघदुरदृष्टहरं प्रकृष्टम् ।
उत्कृष्टवाक्यसुरबृन्दगणेष्टदानलोलं
    विनष्टतमसं शिपिविष्टमीशम् ॥ १५२॥

श्रीपार्वती -
चण्डांशुशीतांशुहुताशनेत्रं चक्षुःश्रवापारविलोलहारम् ।
चर्माम्बरं चन्द्रकलावतंसं चराचरस्थं चतुराननेड्यम् ॥ १५३॥

विश्वाधिकं विश्वविधानदक्षं विश्वेश्वरं विश्रुतनामसारम् ।
विनायकेड्यं विधिविष्णुपूज्यं विभुं विरुपाक्षमजं भजेऽहम् ॥ १५४॥

मधुमथनाक्षिवराब्जपूज्यपादं मनसिजतनुनाशनोत्थदीप्तमन्युम् ।
मम मानसपद्मसद्मसंस्थं मतिदाने निपुणं भजामि शम्भुम् ॥ १५५॥

हरिं हरन्तमनुयन्ति देवा नखैस्तथा पक्षवातैः सुघोणैः ।
नृसिंहमुग्रं शरभाकृतिं शिवं मत्तं तदा दानवरक्तपानात् ॥ १५६॥

नखरमुखरघातैस्तीक्ष्णया दंष्ट्रयापि
    ज्वरपरिकरदेहे नाशतापैः सुदीप्ते ।
दितिजकदनमत्तं संहरन्तं जगच्च
    हरिमसुरकुलघ्नं देवतुष्ट्यै महेशः ।
परशुवरनिखातैः क्रोडमुत्क्रोष्टुमीष्टे ॥ १५७॥

रौद्रनामभिरीशानं स्तुत्वाऽथ जगदंबिका।

प्रेमाश्रुपुलका देवं सा गाढं परिषस्वजे ॥ १५८॥

शौनकः -
कानि रौद्राणि नामानि त्वं नो वद विशेषतः ।
न तृप्तिरीशचरितं शृण्वतां नः प्रसीद भो ॥ १५९॥

सूतः -
तान्यहं वो वदाम्यद्य शृणुद्वं शौनकादयः ॥

पवित्राणि विचित्राणि देव्या प्रोक्तानि सत्तमाः ॥ १६०॥

देवी -
दिशांपतिः पशुपतिः पथीनां पतिरीश्वरः ।
अन्नानां च पतिः शंभुः पुष्टानां च पतिः शिवः ॥ १६१॥

जगतां च पतिः सोमः क्षेत्राणां च पतिर्हरः ।
वनानां पतिरीशानो वृक्षाणां च पतिर्भवः ॥ १६२॥

आव्याधिनीनां च पतिः स्नायूनां च पतिर्गुरुः ।
पत्तिनां च पतिस्ताम्रः सत्वनां च पतिर्भवः ॥ १६३॥

आरण्यानां पतिः शम्भुर्मुष्णतां पतिरुष्णगुः ।
प्रकृतीनां पतिश्चेशः कुलुञ्चानां पतिः समः ॥ १६४॥

रुद्रो गृत्सपतिर्व्रात्यो भगीरथपतिः शुभः ।
अन्धसांपतिरीशानः सभायाः पतिरीश्वरः ॥ १६५॥

सेनापतिश्च श्वपतिः सर्वाधिपतये नमः ।

प्रणता विनता तवाङ्घ्रिपद्मे भगवन् परिपाहि मां विभो त्वम् ।
तव कारुण्यकटाक्षलेशलेशैर्मुदिता शङ्कर भर्ग देवदेव ॥ १६६॥

सूतः -
इति गिरिवरजाप्रकृष्टवाक्यं स्तुतिरूपं विबुधाधिपो महेशः ।
अभिवीक्ष्य तदा मुदा भवानीमिदमाह स्मरगर्वनाशकः ॥ १६७॥

शिवः -
इदमगतनये सहस्रनाम्नां परमरहस्यमहो महाघशोषम् ।

प्रबलतरवरैश्च पातकौघैर्यदि पठते हि द्विजः स मुक्तिभाक् ॥ १६८॥

शैवं मेऽद्य रहस्यमद्भुततरं सद् द्वादशांशान्वितम् ।
श्रुत्वोदारगिरा दरोरुकथया सम्पूरितं धारितम् ।
पापानं प्रलयाय तद्भवति वै सत्यं वदाम्यद्रिजे ॥ १६९॥

श्रुतिगिरिकरिकुम्भगुंभरत्ने त्वयि गिरिजे परया रमार्द्रदृष्ट्या ।
निहितोऽजिह्मधियां मुदेऽयमेष ... मम भक्तजनार्पणं मुदे ॥ १७०॥

ईश्वरः -
एतत्ते पञ्चमांशस्य विस्तरः कथितो मया ।
रहस्यार्थस्य देवेशि किं भूयः श्रोतुमिच्छसि ॥ १७१॥

इत्थं शिववचः श्रुत्वा प्रणम्याथ महेश्वरी ।
समालिङ्ग्य महादेवं सहर्षं गिरिजा तदा॥ १७२॥

प्राह प्रेमाश्रुपुलका श्रुत्वा शिवकथासुधाम् ।

देवी -
अहो धन्यास्मि देवेश त्वत्कथाम्भोधिवीचिभिः ॥ १७३॥

श्रोत्रे पवित्रतां याते माहात्म्यं वेद कस्तव।
मामृते देवदेवेश न भेदोऽस्त्यावयोः शिवः ॥ १७४॥

भव भव भगवन् भवाब्धिपार स्मरगरखण्डनमण्डनोरुगण्ड ।
स्फुरदुरुमुकुटोत्तमाङ्गगङ्गा... दिव्यदेह ॥ १७५॥

अव भव भवहन् प्रकर्षपापाञ्जनमज्ञं जडदुःखभोगसङ्गम् ।
तव सुखकथया जगत् पवित्रं भव भवतात् भवतापहन् मुदे मे ॥ १७६॥

सूतः -
इति देव्या स्तुतो देवो महेशः करुणानिधिः ।
तद्वत् कथानिधिः प्रोक्तः शिवरत्नमहाखनिः ॥ १७७॥

भवतां दर्शनेनाद्य शिवभक्तिकथारसैः ।
पावितोऽस्मि मुनिश्रेष्ठाः किं भूयः श्रोतुमिच्छथ ॥ १७८॥

इति तद्वदनाम्भोजसुधानिष्यन्दिनीं गिरम् ।

श्रुत्वा प्रकटरोमाञ्चः शौनकः प्राह सादरम् ॥ १७९॥

शौनकः -
अहो महादेवकथासुधाम्बुभिः सम्प्लावितोऽस्म्यद्य भवाग्नितप्तः ।
धन्योऽस्मि त्वद्वाक्यसुजातहर्षो द्विजैः सुजातैरपि जातहर्षः ॥ १८०॥

सूतः -
श्रीमत्कैलासवर्ये भुवनजनकतः संश्रुता पुण्यदात्री
शम्भोर्दिव्यकथासुधाब्धिलहरी पापापनोदक्षमा ।
देव्यास्तच्छ्रुतवान् गुरुर्मम मुनिः स्कन्दाच्च तल्लब्धवान्
सेयं शङ्करकिङ्करेषु विहिता विश्वैकमोक्षप्रदा ॥ १८१॥

इति श्रीशिवरहस्ये भर्गाख्ये पञ्चमांशे
.... नाम चत्वारिंशोऽध्यायः ॥